चिक्लेशिषते । चेक्लिश्यते ॥ चेक्लेष्टि । इत्यादि ॥ हौ ; चेक्लिड्ढि । झयादिना पक्षे घेट्ठत्वे जश्त्वम् ॥

क्लेशयति । अचिक्लिशत् ॥

क्लिश उपताप इति दिवादौ ॥

## दक्ष वृद्धौ शीघ्रार्थे च ॥ ५९१ ॥

दक्षते । ददक्षे । दक्षितेत्यादि ॥

दक्षिणः—'द्रुदक्षिभ्यामिनन्' इतीनन् । पूर्वशब्दवत् सर्वनामत्व तत्कार्यं च । स्त्रियां तु टापि दक्षिणा ॥

दक्षिणामर्हतीत्यादि दक्षिणीयः । दक्षिण्यः । 'यङ्क्ष क्षिणाच्छ च' इति द्वितीयान्तात् अर्हतीत्यर्थे छयतौ ॥

ग्रामस्य दक्षिणतो वसति । दक्षिणत आगतः । द णतो रमणीयम्—'दक्षिणोत्तराभ्यामतसुच्' इति सप्तमीपञ्च प्रथमान्तात् स्वार्थेऽतसुच् । 'षष्ठ्यतसर्थप्रत्ययेन' इति र क्षात् षष्ठी । अतसर्थप्रत्ययेनेति सप्तम्याद्यन्तात्स्वार्थे यो वि स उच्यते ॥

दक्षिणा ग्रामस्य—'उत्तराधरदक्षिणादाति.' इत्ययमा अतसुज्विषये । पूर्ववत् ग्रामात् षष्ठी ॥

दक्षिणेन ग्रामम् । ग्रामस्येति वा—'एनबन्यतरस्यामदू पञ्चम्याः' इत्युत्तरादिभ्य एनप् प्रत्ययः । अपञ्चम्या इति त्तनादयः सप्तमीप्रथमान्तेभ्य उत्तराद्यर्थेऽवधिसापेक्ष इति अवधिम तस्य सामर्थ्यादवध्यपेक्षमदूरत्वम् । अन्यतरस्या ग्रहणं य